# मङ्गलम्

- लक्ष्मीं तनोतु नितरामितरानपेक्षम्
- अङ्घ्रिद्वयं निगम-शाखि-शिखा-प्रवालम् ।
- हैरम्बमम्बुरुह-डम्बर-चौर्य-निघ्नम्
- विघ्नाद्रि-भेद-शतधार-धुरन्धरं नः ॥

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# पुनरावर्तनम्

- दशरथस्य वर्णनम्
- कुशध्वजस्य आगमनम्
- राम-लक्ष्मण-भरत-शत्रुघ्नानां विवाहः

अथ दशरथः स्वतनयैः सह कृतविवाहैर्विदेहेभ्यः प्रतिनिवर्तमानो संवर्तसमयसमुज्झृम्भितहुतवहदुःसहरोषं भीषणदुर्वारपराक्रमं क्षत्रवर्गगर्वसर्वंकषपरश्वधधाराधीनरुधिरधाराकल्पितपितृतर्पणं दर्पवतामग्रेसरमुग्रप्रतापिनं तपःसमुचितवल्कलवसानमपि वासनावशादनतिपरिमुषितयुद्धश्रद्धं मध्येमार्गं भार्गवं मुनिं राममद्राक्षीत्।

- अथ, दशरथः, स्व-तनयैः, सह, कृत-विवाहैः, विदेहेभ्यः, प्रतिनिवर्तमानः, संवर्त-समय-समुज्झृम्भित-हुतवह-दुःसह-रोषम्, भीषण-दुर्वार-पराक्रमम्, क्षत्र-वर्ग-गर्व-सर्वंकष-परश्वध-धारा-अधीन-रुधिर-धारा-कल्पित-पितृ-तर्पणम्, दर्पवताम्, अग्रेसरम्, उग्र-प्रतापिनम्, तपः-समुचित-वल्कल-वसानम्, अपि, वासना-वशात्, अनति-परिमुषित-युद्ध-श्रद्धम्, मध्ये-मार्गम्, भार्गवम्, मुनिम्, रामम्, अद्राक्षीत्

# अथ दशरथः स्वतनयैः सह कृतविवाहैर्विदेहेभ्यः प्रतिनिवर्तमानो

- अथ = विवाहानन्तरम्
- दशरथः
- कृतविवाहैः = विहितपरिणयैः
- स्वतनयैः = पुत्रैः रामादिभिः
- सह = साकम्
- विदेहेभ्यः = विदेहदेशात्
- प्रतिनिवर्तमानः = अयोध्यां प्रत्यागच्छन्

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

# मध्येमार्गं भार्गवं मुनिं राममद्राक्षीत्।

- मध्येमार्गम् = पथि
- भार्गवम् = भृगुवंशोत्पन्नम्
- मुनिम्
- रामम् = परशुरामम्
- अद्राक्षीत् = अवलोकितवान्

# संवर्तसमयसमुज्जृम्भितहुतवहदुःसहरोषं भीषणदुर्वारपराक्रमं क्षत्रवर्गगर्वसर्वंकषपरश्वधधाराधीनरुधिरधाराकल्पितपितृतर्पणं

- संवर्तसमयसमुज्जृम्भितहुतवहदुःसहरोषम् – संवर्तसमये = प्रलयकाले, समुज्जृम्भितः = जाज्वल्यमानः यः हुतवहः = प्रलयाग्निः, तद्वत् दुःसहः = सोढुम् अशक्यः, रोषः = क्रोधः यस्य तादृशम् । परशुरामस्य कोपः प्रलयाग्निः इव भयङ्करः इत्यर्थः ।
- भीषणदुर्वारपराक्रमम् – भीषणः = भयङ्करः, दुर्वारः = निवारयितुम् अशक्यः, पराक्रमः = भुजबलं यस्य तादृशम् ।

# संवर्तसमयसमुज्जृम्भितहुतवहदुःसहरोषं भीषणदुर्वारपराक्रमं क्षत्रवर्गगर्वसर्वंकषपरश्वधधाराधीनरुधिरधाराकल्पितपितृतर्पणं

- क्षत्रवर्गगर्वसर्वंकषपरश्वधधाराधीनरुधिरधाराकल्पितपितृतर्पणम् – क्षत्रवर्गस्य = क्षत्रियसमूहस्य यः गर्वः = अहङ्कारः, तस्य सर्वङ्कषा = समूलतः विनाशिका या परश्वधधारा = परशोः निशिताग्रभागः, तदधीना = तदायत्ता, तया निष्पादिता या रुधिरधारा = रक्तप्रवाहः, तया कल्पितम् = अनुष्ठितम्, पितृतर्पणम् = पितुः निवापोदकं येन तादृशम् । भार्गवरामः स्वस्य परशुना सर्वेषां क्षत्रियाणां गर्वं समूलम् उत्पाट्य तेषां रक्तप्रवाहेन पितुः जमदग्नेः तर्पणं चकार ।

Vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# दर्पवतामग्रेसरमुग्रप्रतापिनं तपःसमुचितवल्कलवसानमपि वासनावशादनतिपरिमुषितयुद्धश्रद्धं

- दर्पवताम् अग्रेसरम् = शौर्यमदोद्धतम्
- उग्रप्रतापिनम् = प्रचण्डप्रभावम्
- तपःसमुचितवल्कलवसानम् = तपश्चर्यानुकूलं वृक्षत्वग्वस्त्रं धरन्तम्
- अपि = तथापि
- वासनावशात् = पुरातनसंस्कारबलेन
- अनतिपरिमुषितयुद्धश्रद्धम् = सम्पूर्णतः अनपगता युद्धेच्छा यस्य तादृशम्

# अथ दशरथः स्वतनयैः सह...

- तात्पर्य्यम् – दशरथः पुत्राणां विवाहोत्तरं सपरिवारम् अयोध्यां प्रत्यागच्छन् मार्गमध्ये जामदग्न्यं परशुरामं दृष्टवान् । तस्य परशुरामस्य क्रोधः प्रलयाग्निरिव भयङ्करः; तस्य भुजबलम् अत्युग्रं निवारयितुम् अशक्यं च; सः दुष्टानां क्षत्रियाणाम् अहङ्कारं समूलम् उत्पाट्य तेषां रक्तस्य प्रवाहेण स्वपितुः जमदग्नेः तर्पणं विहितवान् आसीत्; शौर्यमदोद्धतः, प्रचण्डप्रभावश्च सः मुनिवेषं धरन् अपि संस्कारबलात् युद्धासक्तः एव ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# अप्राक्षीच्च तन्निरीक्षणादेव प्रक्षीणहर्षोऽपि महर्षिभिः सह विधाय सपर्यामार्यशील कुशलमिति।

- अप्राक्षीत्, च, तत्-निरीक्षणात्, एव, प्रक्षीण-हर्षः, अपि, महर्षिभिः, सह, विधाय, सपर्याम्, आर्य-शील, कुशलम्, इति
- तन्निरीक्षणात् = परशुरामस्य दर्शनात्
- एव
- प्रक्षीणहर्षः = न्यूनीकृतानन्दः
- अपि
- महर्षिभिः = वसिष्ठादिभिः

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

# अप्राक्षीच्च तन्निरीक्षणादेव प्रक्षीणहर्षोऽपि महर्षिभिः सह विधाय सपर्यामार्यशील कुशलमिति।

- सह = साकम्
- सपर्याम् = पूजाम्
- विधाय = कृत्वा
- आर्यशील = महानुभाव
- कुशलम् = क्षेमं वा?
- इति अप्राक्षीत् = एवं पृष्टवान्

Vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education

# अप्राक्षीच्च तन्निरीक्षणादेव प्रक्षीणहर्षोऽपि महर्षिभिः सह विधाय सपर्यामार्यशील कुशलमिति।

- तात्पर्य्यम् – परशुरामस्य दर्शनादेव दशरथस्य मनसि भयमुत्पन्नम् । तथापि वसिष्ठादिभिः सह समुचितां पूजां कृत्वा दशरथः परशुरामस्य कुशलप्रश्नं कृतवान् ।
- अप्राक्षीत् – "प्रच्छ ज्ञीप्सायाम्" – लुङ्, १.१
- प्रक्षीणहर्षः – प्रक्षीणः हर्षः यस्य सः
- सपर्याम् – "पूजा नमस्या-अपचितिः सपर्या-अर्चा-अर्हणाः समाः" (अमरः)

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

अथ दशरथवाणीं तामशृण्वन्प्रसन्नां
भृगुपतिरिदमूचे प्रश्रितं रामभद्रम्।
अवजिगमिषुरासं जीर्णचापात्तकीर्ते-
रविदितपरशोस्ते दोर्मदं कार्मुकेऽस्मिन्॥१११॥

- अथ, दशरथ-वाणीम्, ताम्, अशृण्वन्, प्रसन्नाम्, भृगु-पतिः, इदम्, ऊचे, प्रश्रितम्, रामभद्रम्, अवजिगमषुः, आसम्, जीर्ण-चाप-आत्त-कीर्तेः, अविदित-परशोः, ते, दोर्मदम्, कार्मुके, अस्मिन्

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

अथ दशरथवाणीं तामशृण्वन्प्रसन्नां भृगुपतिरिदमूचे प्रश्रितं रामभद्रम्।
अवजिगमिषुरासं जीर्णचापात्तकीर्तेरविदितपरशोस्ते दोर्मदं कार्मुकेऽस्मिन्॥११॥

- अथ = कुशलप्रश्नानन्तरम्
- ऊचे = अब्रवीत्
- कः ऊचे? भृगुपतिः = परशुरामः
- किं कृत्वा ऊचे? अशृण्वन् = न गणयन्
- काम् अशृण्वन्? तां दशरथवाणीम् = दशरथेन कृतं कुशलप्रश्नम्
- कीदृशीं दशरथवाणीम्? प्रसन्नाम् = श्राव्याम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

अथ दशरथवाणीं तामशृण्वन्प्रसन्नां भृगुपतिरिदमूचे प्रश्रितं रामभद्रम्।
अवजिगमिषुरासं जीर्णचापात्तकीर्तेरविदितपरशोस्ते दोर्मदं कार्मुकेऽस्मिन्॥११॥

- कम् ऊचे? रामभद्रम् = श्रीरामम्
- कीदृशं रामभद्रम्? प्रश्रितम् = विनयान्वितम्
- किम् ऊचे? इदम् = एतद् वचनम्
- [किम् इति ऊचे?]
- आसम् = अभवम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

अथ दशरथवाणीं तामश्रृण्वन्प्रसन्नां भृगुपतिरिदमूचे प्रश्रितं रामभद्रम्।
अवजिगमिषुरासं जीर्णचापात्तकीर्तेरविदितपरशोस्ते दोर्मदं कार्मुकेऽस्मिन्॥११॥

- कथम्भूतः आसम्? अवजिगमिषुः = ज्ञातुम् इच्छुः
- कम् अवजिगमिषुः? दोर्मदम् = भुजयोः दर्पम्
- कस्य दोर्मदम्? ते = तव, रामस्य
- कीदृशस्य ते? जीर्णचापात्तकीर्तेः = शिथिलस्य शिवधनुषः भङ्गेन प्राप्तयशसः
- पुनः कीदृशस्य ते? अविदितपरशोः = मम आयुधस्य परशोः प्रभावम् अजानतः
- कुत्र? कार्मुके अस्मिन् = पुरःस्थिते वैष्णवधनुषि

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

अथ दशरथवाणीं तामशृण्वन्प्रसन्नां भृगुपतिरिदमूचे प्रश्रितं रामभद्रम्।
अवजिगमिषुरासं जीर्णचापात्तकीर्तेरविदितपरशोस्ते दोर्मदं कार्मुकेऽस्मिन्॥११॥

- अन्वयः – अथ तां प्रसन्नां दशरथवाणीम् अशृण्वन् भृगुपतिः प्रश्रितं रामभद्रम् इदम् ऊचे – "अविदितपरशोः, जीर्णचापात्तकीर्तेः ते दोर्मदम् अस्मिन् कार्मुके अवजिगमिषुः आसम्"
- तात्पर्य्यम् – दशरथस्य श्राव्यं कुशलप्रश्नं न गणयन् परशुरामः विनयान्वितं श्रीरामम् इत्थम् अकथयत् – "हे राम! त्वं मम आयुधस्य परशोः प्रभावं न जानासि । शिथिलस्य शिवधनुषः भङ्गमात्रेण यशः प्राप्तवानसि । इदानीं तव भुजयोः वस्तुतः किं बलम् इति अस्मिन् वैष्णवधनुषि परीक्षितुम् इच्छामि" इति।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam - Value Education - Technology

अथ दशरथवाणीं तामशृण्वन्प्रसन्नां भृगुपतिरिदमूचे प्रश्रितं रामभद्रम्।
अवजिगमिषुरासं जीर्णचापात्तकीर्तेरविदितपरशोस्ते दोर्मदं कार्मुकेऽस्मिन्॥११॥

- अशृण्वन् – न शृण्वन् । तकारान्तः, पुं, १.१
- भृगुपतिः – भृगूणां पतिः
- प्रश्रितम् – "निभृत-विनीत-प्रश्रिताः समाः" (अमरः)
- अवजिगमिषुः – अवगन्तुम् इच्छुः । अव+गम्+सन्+उ ।
- जीर्णचापात्तकीर्तेः – जीर्णः चापः, जीर्णचापेन आत्ता, जीर्णचापात्ता कीर्तिः यस्य सः, तस्य

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskrtam · Value Education · Technology

अथ दशरथवाणीं तामशृण्वन्प्रसन्नां भृगुपतिरिदमूचे प्रश्रितं रामभद्रम्।
अवजिगमिषुरासं जीर्णचापात्तकीर्तेरविदितपरशोस्ते दोर्मदं कार्मुकेऽस्मिन्॥११॥

- अविदितपरशोः – न विदितः, अविदितः परशुः येन सः, तस्य
- दोर्मदम् – दोष्णोः मदः, तम्
- कार्मुके – “धनुश्चापौ धन्व-शरासन-कोदण्ड-कार्मुकम्”
- मालिनीवृत्तम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

आदाय तत्सगुणमाशु विधाय तत्र
सन्धाय बाणमवधार्य तपोधनत्वम्।
तज्जीवितस्य दयमानमना मनीषी
सम्भूतघोरसमराद्विरराम रामः॥११२॥

- आदाय, तत्, सगुणम्, आशु, विधाय, तत्र, सन्धाय, बाणम्, अवधार्य, तपो-धनत्वम्, तत्-जीवितस्य, दयमान-मनाः, मनीषी, सम्भूत-घोर-समरात्, विरराम, रामः

# आदाय तत्सगुणमाशु विधाय तत्र सन्धाय बाणमवधार्य तपोधनत्वम्।
# तज्जीवितस्य दयमानमना मनीषी सम्भूतघोरसमराद्विरराम रामः॥११२॥

- विरराम = विरतः अभूत्
- कः विरराम? रामः
- किं कृत्वा विरराम? आदाय = स्वीकृत्य
- किम् आदाय? तत् = वैष्णवं धनुः
- पुनः किं कृत्वा? विधाय = कृत्वा
- तत् किं विधाय? सगुणम् = मौर्वीसहितम्
- कथं विधाय? आशु = झटिति

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

आदाय तत्सगुणमाशु विधाय तत्र सन्धाय बाणमवधार्य तपोधनत्वम्।
तज्जीवितस्य दयमानमना मनीषी सम्भूतघोरसमराद्विरराम रामः॥११२॥

- पुनः किं कृत्वा? सन्धाय = योजयित्वा
- कं सन्धाय? बाणम् = शरम्
- कुत्र सन्धाय? तत्र = तस्मिन् धनुषि
- पुनः किं कृत्वा? अवधार्य = विचिन्त्य
- किम् अवधार्य? तपोधनत्वम् = तपस्वी अयम् (अतः अवध्यः)

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

आदाय तत्सगुणमाशु विधाय तत्र सन्धाय बाणमवधार्य तपोधनत्वम्।
तज्जीवितस्य दयमानमना मनीषी सम्भूतघोरसमराद्विरराम रामः॥११२॥

- कीदृशः रामः? मनीषी = विवेकसम्पन्नः
- पुनः कीदृशः रामः? दयमानमनाः = करुणापूरितचित्तः
- कस्य दयमानमनाः? तज्जीवितस्य = परशुरामस्य प्राणानां विषये
- कस्मात् विरराम? सम्भूतघोरसमरात् = समुपस्थितात् दारुणयुद्धात्

आदाय तत्सगुणमाशु विधाय तत्र सन्धाय बाणमवधार्य तपोधनत्वम्।
तज्जीवितस्य दयमानमना मनीषी सम्भूतघोरसमराद्विरराम रामः॥११२॥

- अन्वयः – मनीषी रामः तत् आदाय, आशु सगुणं विधाय, तत्र बाणं सन्धाय, तपोधनत्वम् अवधार्य, तज्जीवितस्य दयमानमनाः सम्भूतघोरसमराद् विरराम
- तात्पर्य्यम् – विवेकसम्पन्नः श्रीरामः परशुरामात् वैष्णवं धनुः स्वीकृत्य, झटिति तत्र मौर्वीम् आरोप्य, शरं योजितवान् । किन्तु परशुरामः तपस्वी, अतः अवध्यः इति विचार्य, तस्य प्राणेषु करुणापरः सन् समुपस्थितात् दारुणयुद्धात् विरतः अभूत् ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# आदाय तत्सगुणमाशु विधाय तत्र सन्धाय बाणमवधार्य तपोधनत्वम्।
# तज्जीवितस्य दयमानमना मनीषी सम्भूतघोरसमराद्विरराम रामः॥११२॥

- सगुणम् – गुणेन सहितम्
- आशु – "सत्वरं चपलं तूर्णमविलम्बितमाशु च" (अमरः)
- दयमानमनाः – दयमानं मनः यस्य सः । सकारान्तः, पुं, १.१
- मनीषी – मनीषा अस्य अस्ति । नकारान्तः, पुं, १.१
- विरराम – वि+ "रमु क्रीडायाम्" – लिट्, प्रथम.१ । "व्याङ्परिभ्यो रमः" (१।३।८३) इति परस्मैपदित्वम्
- वसन्ततिलका वृत्तम्

तावुभौ च भृगुवंशसम्भवौ
चापदण्डजमदग्निसम्भवौ।
प्रह्वभावमवलम्ब्य केवलं
राघवार्पितगुणौ बभूवतुः॥११३॥

- तौ, उभौ, च, भृगु-वंश-सम्भवौ, चाप-दण्ड-जमदग्नि-सम्भवौ, प्रह्व-भावम्, अवलम्ब्य, केवलम्, राघव-अर्पित-गुणौ, बभूवतुः

vyoma ॥ वाचं धेनुमुपासीत ॥ Samskritam - Value Education - Technology

# तावुभौ च भृगुवंशसम्भवौ चापदण्डजमदग्निसम्भवौ।
# प्रह्वभावमवलम्ब्य केवलं राघवार्पितगुणौ बभूवतुः॥११३॥

- बभूवतुः = अभवताम्
- कौ बभूवतुः? उभौ तौ
- कौ तौ? चापदण्डजमदग्निसम्भवौ = धनुर्यष्टिः, परशुरामश्च
- कीदृशौ तौ? भृगुवंशसम्भवौ = भृगुवंशे सञ्जातौ (परशुरामः भृगुमहर्षेः वंशे जातः, चापः भृगोः = शैलप्रपातस्य वंशे = वेणौ जातः)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# तावुभौ च भृगुवंशसम्भवौ चापदण्डजमदग्निसम्भवौ।
# प्रह्वभावमवलम्ब्य केवलं राघवार्पितगुणौ बभूवतुः॥११३॥

- कथम्भूतौ बभुवतुः? राघवार्पितगुणौ - राघवेण = श्रीरामेण अर्पितः गुणः = मौर्वी / साधुत्वं च ययोः तौ
- किं कृत्वा बभुवतुः? अवलम्ब्य = प्राप्य
- कम् अवलम्ब्य? प्रह्वभावम् = नम्रत्वम्
- कीदृशं प्रह्वभावम्? केवलम् = अत्यन्तम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education ...

# तावुभौ च भृगुवंशसम्भवौ चापदण्डजमदग्निसम्भवौ।
# प्रह्वभावमवलम्ब्य केवलं राघवार्पितगुणौ बभूवतुः॥११३॥

- अन्वयः – तौ उभौ भृगुवंशसम्भवौ चापदण्ड-जमदग्निसम्भवौ केवलं प्रह्वभावम् अवलम्ब्य राघवार्पितगुणौ बभूवतुः
- तात्पर्य्यम् – शुक्रवंशो जातः परशुरामः, प्रपातवेणौ जातः धनुर्दण्डः च अत्यन्तं नम्रत्वं प्राप्य श्रीरामेण आरोपितगुणौ (मौर्वी, साधुत्वगुणश्च) अभवताम्

vyoma ॥ वाचं धेनुमुपासीत॥ Samskritam - Value Education - Technology

# तावुभौ च भृगुवंशसम्भवौ चापदण्डजमदग्निसम्भवौ।
# प्रह्वभावमवलम्ब्य केवलं राघवार्पितगुणौ बभूवतुः॥११३॥

- भृगुवंशसम्भवौ – "भृगुर्दैत्यगुरौ शम्भौ जमदग्नि-प्रपातयोः" (नानार्थरत्नमाला)
- राघवार्पितगुणौ – राघवेण अर्पितः, राघवार्पितः गुणः ययोः तौ ।
- श्लेषः, तुल्ययोगिता – "प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता"
- रथोद्धता वृत्तम् – "रान्नराविह रथोद्धता लगौ" – ११ अक्षराणि – र-न-र-ल-गु

युगपत्प्राप्तगुणयोश्चापभार्गवरामयोः।
ऋजुता वक्रतां प्राप वक्रतापि तथार्जवम्॥११४॥

- युगपत्, प्राप्त-गुणयोः, चाप-भार्गव-रामयोः, ऋजुता, वक्रताम्, प्राप, वक्रता, अपि, तथा, आर्जवम्
- प्राप = आप्नोत्
- का प्राप? ऋजुता = आर्जवम्
- कां प्राप? वक्रताम् = नम्रत्वम्
- तथा = अपि च

युगपत्प्राप्तगुणयोश्चापभार्गवरामयोः।
ऋजुता वक्रतां प्राप वक्रतापि तथार्जवम्॥११४॥

- पुनः का अपि प्राप? वक्रता अपि = नम्रत्वम् अपि
- कां प्राप? आर्जवम् = ऋजुताम्
- कयोः ऋजुता (वक्रता)? चापभार्गवरामयोः = धनुषः, परशुरामस्य च
- कीदृशयोः चापभार्गवरामयोः? प्राप्तगुणयोः = मौर्वीम्, सद्गुणं च प्राप्तयोः
- कदा प्राप्तगुणयोः? युगपत् = समानकाले

Vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam - Value Education

# युगपत्प्राप्तगुणयोश्चापभार्गवरामयोः।
# ऋजुता वक्रतां प्राप वक्रतापि तथार्जवम्॥११४॥

- अन्वयः – युगपत् प्राप्तगुणयोः चाप-भार्गवरामयोः ऋजुता वक्रतां प्राप, तथा वक्रता अपि आर्जवं प्राप
- तात्पर्य्यम् – धनुः, परशुरामश्च समानकाले गुणम् (मौर्वीम्, सद्गुणं च) प्राप्तवन्तौ । किन्तु तेन ऋजु धनुः (रामेण अवनमितः) नम्रत्वं प्राप्नोत्, अहङ्कारेण वक्रः परशुरामः श्रीरामस्य पराक्रमं विज्ञाय आर्जवं प्राप्नोत् ।

युगपत्प्राप्तगुणयोश्चापभार्गवरामयोः।
ऋजुता वक्रतां प्राप वक्रतापि तथार्जवम्॥११४॥

- प्राप्तगुणयोः – प्राप्तः गुणः याभ्यां तौ
- ऋजुता, आर्जवम् – ऋजोः भावः । ऋजु + तल्, ऋजु + अण्
- वक्रता – वक्रस्य भावः
- काव्यलिङ्गालङ्कारः – “हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम्”, अतिशयोक्तिः, विरोधाभासः

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam - Value Education - Technology

# सङ्क्षेपः

- परशुरामस्य दर्शनम्
- रामं प्रति परशुरामस्य आह्वानम्
- परशुरामस्य गर्वभङ्गः
- चापदण्ड-परशुरामयोः वर्णनम्






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in












- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in